रादेश्चेतिइन् अस्यचलोपः **दीर्घोलघोः** लघुन्यक्षरे
परेऽभ्यासस्यलघोर्दीर्घोभवति इनिचण्परेपरतः अचू
चुरत् चुरस्तेये चुरादेश्चेतिइन् उपधायागुणः दि चण् चु
र् द्विर्व कारितलोपः इन्यसमानेतिह्रस्वः अनेनाभ्यास
स्यदीर्घः **त्वरादीनांच** ञित्वरासंभ्रमेप्रथप्रख्या
ने म्रदमर्दने स्पशबाधनस्पर्शनयोः स्मृचिन्तायाम् दृ
विदारणे स्तृञ्आच्छादने एषामभ्यासस्य अकारादेशोभ
वति इनिचण्परेपरतः अकारस्यच अकारः सन्यवर्णस्ये
ति इत्वबाधनार्थः अतत्वरत् अपप्रथत् अमम्रदत् अ
पस्पशत् असस्मरत् अददरत् अतस्तरत् त्वरमा
णंप्रयुक्त प्रथमानं म्रदमानं स्पशमानं स्मरन्तं दृणन्तं
स्तृणन्तं इन् दि चण् कारितलोपः इन्यसमानेतिह्रस्वः
त्वरप्रथम्रदामात्वन्यायेनोह्रस्वः अनेनाभ्यासस्य अत्वम्
स्पशोः स्तृणातेश्च शिड्घोषोघोषः **गणोरीच** गणसं
ख्याने इन्यस्य इनिचण्परेपरतः अभ्यासस्य अकारोभ
वति ईकारश्च अजगणत् अजीगणत् चुरादेश्चेतिइन्
अस्यचलोपः दि चण् द्विर्व अनेन अकार ईकारौ इ
**नोलोपोऽभ्यासस्य** इतउत्तरंयत्रयत्राभ्यास
स्यलोपोभवति इत्यधिक्रियते आपादपरिसमाप्तेरयम
धिकारः **सनिमीमादारभलभशकपतपदा**
**मिच्स्वरस्य** मीइति मीञ्हिंसायां डुमिञ्प्रक्षेपणे
इतिवा माइति मामाने माङ्माने मीञ्प्रतिघाने इति
वा दाइति दासंज्ञकाः रभराभस्ये डुलभष्प्राप्तौ शा

क्लृशक्तौ पत्लृगतौ पदगतौ एषांस्वरस्यस्थाने इस् आ
देशोभवति अभ्यासलोपश्च सनिपरे मित्सति मित्सते
दित्सति धित्सते आरिप्सते अचोघेअयमइतिभस्यपः।
लिप्सते शिक्षति पित्सति पित्सते मातुमिच्छति दातुं धा
तुं रब्धुं लब्धुं शक्तुं पतितुं पत्तुं धातोर्वेतिसन् द्विर्व
अनेनस्वरस्यइस् अभ्यासस्यचलोपः मीमादाइत्यनेनास
स्यसेसार्वधातुकेतइतिसस्यतः अन्यत्रस्कोःसंयोगाद्योरा
न्तेचेतिसलोपः **आप्नोतेरी** आप्लृव्याप्तावित्यस्यसनि
परेस्वरस्यईत्वंभवति अभ्यासलोपश्च ईप्सति आप्तुमिच्छ
तिसन् अनेनआकारस्यईत्वम् अभ्यासलोपश्च **दम्भे**
**रिच्च** दम्भदम्भेइत्यस्यसनिपरेस्वरस्यइत्वंभवति चश
ब्दात् ईत्वंच धिप्सति धीप्सति दम्भितुमिच्छतिसन् दम्भे
रनिटिसनि अत्वघङ्लोपः अनेनाकारस्य इत्वं ईत्वंच।
अभ्यासलोपश्च तृतीयादेर्घढधभान्तस्येति दस्यधः अ
चोघेझभिटामितिभस्यपः अस्यापिग्रामवत् इत्वे इत्वं
ईत्वंच अभ्यासलोपश्चनेट्पक्षे दिदम्भिषति **दिग्यिदय**
**तेःपरोक्षायाम्** देङ्रक्षणेइत्यस्य परोक्षायांपरस्यां
दिगिआदेशोभवति अभ्यासलोपश्च दिग्ये दिग्याते दि
ग्यिरे यरवर्तस्येतियः **इतिलघुसारस्वताख्यानव्याक**
**रणेद्विवचनपादस्तृतीयः अ ओंकारस्वरायाः**
**संप्रसारणमन्तस्थायाः** अधिकारोयम् इतऊर्ध्वंय
दुक्तमस्तत्परस्वरसहितायाअन्तस्थायाः संप्रसारणंभव
तीत्यधिक्रियते सन्ध्यक्षरान्तानामाकारोविकरणेइत्यतः।

प्रागयमधिकारः ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छति भृज्जतीनाञ्च ग्रहउपादाने ज्यावयोहानौ वेञ् त न्तुसन्ताने वेञोवयिः व्यधताडने वशकान्तौ व्यचसम्बरे। प्रच्छज्ञीप्सायाम् ओव्रश्चूछेदने भ्रस्जपाके एषामन्तस्थायाः सस्वरायाःसंप्रसारणंभवति ग्रहणोप्रत्ययेपरे गृह्यते। जीयते सार्वधातुकेयण् अनेनसंप्रसारणेन्तानांयस्मायी तिदीर्घः ऊयतः ऊयुः वेञ्तन्तुसन्ताने अनस् उस् वे ञोवयिः संप्र द्विर्वे वियते उप्यते विध्यते पृच्छ्यते वृ श्च्यते भृज्ज्यते यण्संप्रमुक्तः पुटोन्तरतीयइतिसस्वदः तस्यतवर्गश्चुटेतिजः जरीगृह्यते जेजीयते वेविध्यते वे विच्यते परीपृच्छ्यते वरीवृश्च्यते बरीभृज्ज्यते ग्रहर्णस्य गृह्णाति जिनाति विध्यति विचति पृच्छति वृश्चति भृज्ज ति धातोरेकस्वरेतियङ्भावः अनेनसंप्र द्विर्वे उरमतोरीग्र कारककवर्णस्य अभ्यासेणाम्रेकीयितेइतिग्रहणः स्वपिव चियजादीनांयण्परोक्षाशीष्षु निष्वप्शयने वच भाषणे अनयोः तथायजादीनां यजदेवतापूजासङ्ग तिकरणदानेषु डुवपबीजसन्ताने वहप्रापणे वेञ् त न्तुसन्ताने वेञ्संवरणे व्हेञ्स्पर्धायांशब्देच वदव्यक्ता यांवाचि वसनिवासे टुओश्विगतिवृद्ध्योः एषांचान्तस्था याः सस्वरायाः संप्रसारणंभवति यणि परोक्षायां आ शिषिचात्मनेपदे ततः सुप्यते उच्यते इज्यते उप्यते उह्य ते ऊयते संवीयते आहूयते उद्यते उष्यते शूयते नेयण् अनेनसंप्र णामन्तानांयस्मायीतिदीर्घः परोक्षायाम्।

सुषुपतुः सुषुपुः ऊयतुः ऊयुः ईजतुः ईजुः ऊपतुः ऊपुः
ऊहतुः ऊहुः संविव्यतुः संविव्युः जुहुवतुः जुहुवुः ।
ऊ  दतुः ऊदुः ऊषतुः ऊषुः अतस्य उस्य संप्र ह्विर्व ञेञः
सन्ध्यक्षरान्तानामाकारः स्वरादावविवर्तेस्त्वत् वसेःशा
सिवसीति सस्यषः ञेञः यश्वासस्येति यः आशिषि स्वप्या
त् उच्यात् इज्यात् उप्यात् उह्यात् ऊयात् संवीयात् आहू
यात् उद्यात् उष्यात् ह्रूयात् आपृीयात् संप्रनाम्यन्तानां
यस्मायीतिदीर्घः आशिषिचपरस्मैइतिगुणाभावः परो
क्षायामभ्यासस्योभयेषाम् उभयेषांयजादीनां
स्वपादीनांचपरोक्षायांपरस्यां अभ्यासस्यसंप्रसारणंभव
ति सगुणार्थवचनम् जिज्यौ उवाय विव्याथ उवाथ वि
व्याच वव्रश्च सुष्वाप उवाच इयाज उवाप उवाह विव्या
य उवाद उवास अट् अभ्यासस्यसंप्र जिनातेः आकाराद
टौ सन्ध्यक्षरेचेत्यालोपः ञेञोनव्ययतेः परोक्षायामि
त्यात्वेनभवति सन्ध्यक्षरान्तानामित्यात्वप्राप्तम् अयोपयेति वृद्धिः
अभ्यासोपधादीर्घः अथोऽभ्यसः भयचलनयोस्तस्यपरोक्षायांपरस्यां
अभ्या
सस्यसंप्रसारणंभवति विव्यथे विव्यथाते विव्यथिरे अ
नेनाभ्यासस्यसंप्र नवेञ्यो रगुणोत्र वेञ् तन्तुसन्ता
ने ञुओश्विगतिवृद्ध्योः अनयोः परोक्षायामगुणो सगुणोऽ
वाप्रत्यये परेसंप्रसारणंनभवति ववौ ववतुः ववुः शि
श्वाय शिश्वियतुः शिश्वियुः स्वपिस्यमिव्येञांयेङी
षिते जिष्वप् ञायनेस्यमस्वनशब्दे व्येञ् संवरणे पश्चा
द्येङीषिते परेसंप्रसारणंभवति सोषुप्यते सेसिम्यते वे ।

वीयते अत्यर्थं स्वपिति स्यमति व्ययति यङाङ्गः अनेन संप्र
द्विर्व गुणश्चेक्रीयिते स्वपेः षत्वम् सेसोनाम्यन्तानां यस्मा
यीतिदीर्घः **स्वापेश्चणि** स्वपेर्णिन्नतात् चणिपरे अन्तःस्था
याः संप्रसारणं भवति असूषुपत् स्वपन्तं प्रायुङ्क्त इन् अ
स्यापयेतिदीर्घः द्विचणि अनेन संप्रकारितलोपः द्विर्वदी
र्घोलघोः अडागमादिः **ग्रहिस्वपिप्रच्छां सनि** ग्रहउपा
दा निषेधस्थायते प्रच्छज्ञीप्सायाम् एषां सनि
परे अन्तस्थायाः संप्रसारणं भवति जिघृक्षति सुषुप्सति।
पिपृच्छिषति गृहीतुमिच्छति स्वप्तुम् प्रष्टुम् धातोर्वे
ति सन् संप्रदायः तृतीयादेर्घढधभान्तस्येति गस्यघः द्वि
र्वग्रहगुहोः सनीति इडभावः सिषूङ् ज्वषू इतिइट् **चा
यः कीचेक्रीयिते** चायृ पूजानिशामनयोरित्यस्य चे
क्रीयितेपरे कीआदेशो भवति चेकीयते अत्यर्थं चायते
इति यङाङ्गः अनेन कीआदेशः द्विर्व गुणश्चेक्रीयिते
इति गुणः चेक्रीयिते इति किम् चायते **प्यायः पी परो
क्षायाम्** चेक्रीयितग्रहणमनुवर्तते स्फायी ओप्यायी वृ
द्धावित्यस्य परोक्षायां परतः पीआदेशो भवति पेपीयते
अत्यर्थं प्यायते यङाङ्गः अनेन पीआदेशः द्विर्व गुणश्चेक्री
यिते आपिप्ये आपिप्याते आपिप्यिरे अनेन पीआदेशः द्विर्व ह्रस्वः य
इवर्णस्येति यः परोक्षायामिति किम् प्यायते **श्वयतेर्वा**
टुओश्वि गतिवृद्ध्योरित्यस्य चेक्रीयितपरोक्षयोः परयोः संप्र
सारणं वा भवति शोशूयते शेश्वीयते अत्यर्थं श्वयति य
ङाङ्गः अनेन वा संप्र द्विर्व शुशाव शुशुवतुः शुशुवुः शि

श्वाय शिश्वियतुः शिश्वियुः अटि वृद्धिः स्वरादाविवर्णोति इ
द्वैवा **कारिते च संश्चणोः** श्वयतेरन्तस्थायाः संप्रसारणं
वा भवति कारिते सन्परे चण्परे च परतः शुशावयिषति श्व
यन्तं प्रयोक्तुमिच्छति इन् सन् संप्र इट् वृद्धिः इनि कृतं स्थानिव
दिति शु द्विर्व पत्वे शिश्वायिषति इन् सन् इट् वृद्धिः शि
श्विप्रावयत् अशूशुवत् श्वयन्तं प्रायुङ्क्त इन् दि चण् संप्र
वृद्धिः कारितलोपः शु द्विर्व इस्वसमानेति ह्रस्वः अभ्यास
स्य दीर्घो लघोः पत्वे अशिश्वयत् इनि कृतं स्थानिवदिति ।
श्वि द्विर्व इस्वसमानेति ह्रस्वः **ह्वयतेर्नित्यम्** ह्वेञ् स्पर्धा
यामित्यस्य नित्यं संप्रसारणं भवति कारिते सन्परे चण्परे
च परतः जुहावयिषति ह्वयन्तं प्रयोक्तुमिच्छति इन् स
न् इट् अनेन आदौ संप्रसारणतो वृद्धिः इनि कृतं स्थानिवदिति
हु द्विर्व हो जः नाम्यन्तयोरिति गुणः अजूहवत् ह्वयन्तं
प्रायुङ्क्त इन् दि चण् संप्र वृद्धिः कारितलोपः आवन् हु
द्विर्व इस्वसमानेति ह्रस्वः दीर्घो लघोः **अभ्यस्तस्य च**
ह्वयतेरभ्यस्तस्य नित्यं संप्रसारणं भवति जुहाव अट् द्वि
र्व अनेन द्वयोरपि धात्वभ्यासयोः संप्र हो जः धातोरस्योप
धेति वृद्धिः जुहूषति ह्वातुमिच्छति सन् द्विर्व अनेन द्वयो
रपि संप्र स्वरान्तानां सनीति दीर्घः जोहूयते अत्यर्थं ह्वय
ति यशब्दः द्विर्व अनेन द्वयोः संप्र गुणश्चेक्रीयिते नाम्य
न्तानां यणायीति दीर्घः **द्युतिस्वाप्योरभ्यासस्य** द्युत
दीप्तौ ञिष्वप् शये अनयोरिन्नन्तयोर्योऽभ्यासः तस्य संप्र
सारणं भवति दिद्युते परोक्षा ए द्विर्व अनेन संप्र दियो

ति  ष्वते योतितुमिच्छति सन् द्विर्वं संप्र इट् घंशउपा
धाद्गुणः देद्युत्यते अत्यर्थं द्योत्यते यञ्चाह्वः द्विर्वं संप्रगुणा
श्चेक्रीयिते अदिद्युतत् द्योतमानं प्रायुङ्क्त इन् उपधाद्गुणः
दिवणे कारितलोपः द्युत् द्विर्वं संप्र इस्वसमानेतिह्रस्वः
स्वापेः खल्वपि सुष्वापयिषति स्वपन्तं प्रयोक्तुमिच्छति इन्
सन् इट् अस्योपधायेतिदीर्घः स्वप् द्विर्वं अनेनाभ्यासस्य सं
प्र घवे. अभ्यासस्येति किम् योतते स्वापयति नसंप्रसा
रणे संप्रसारणम् संप्रसारणे कृते पुनः संप्रसारणं न
भवति विध्यते विच्यते अयताडने अवसंभवे ते यण् प्र
हिज्येति संप्रसारणे कृते पुनर्न भवति वशोश्चेक्रीयि
ते वशकान्तावित्यस्य चेक्रीयितपरे संप्रसारणं न भव
ति वावश्यते अत्यर्थं वष्टि यञ्चाह्वः द्विर्वं दीर्घो नागमेति
दीर्घः चेक्रीयिते इति किम् उशन्ति अन्ति अन्वि लुक् प्र
हज्येति संप्र प्रच्छादीनां परोक्षायाम् प्रच्छिभ्रस्जि
भ्र . स्जां परोक्षायां परस्मैं संप्रसारणं न भवति ग्रहि
ज्यावयीति प्राप्तम् पप्रच्छतुः पप्रच्छुः वव्रश्चतुः वव्र
श्चुः बभ्रज्जतुः बभ्रज्जुः पुटान्तस्तीयइति सस्य दः तस्य
तवर्गश्चटेति जः सन्ध्यक्षराणामाकारोविक
रणे सन्ध्यक्षरान्तानां धातूनामन्तस्य आकारो भव
ति अविकरणे विकरणे तु न भवति दाता देङ् रक्षणे
देङ् दोदने दोअवखण्डने अनेन आत्वम् अविकर
णे इति किम् दयते दायति ते ति अन्वि प अय् पेञाय्
नव्ययतेः परोक्षायाम् व्येञ् संवरणे इत्यस्य परो

क्षायां परस्मै सम्प्रसारणस्य आत्वं न भवति विव्याय विव्यथि
थ अद् घस्लृ अदेर्द्विर्वे परोक्षायामभ्यासस्येति सस्य अदेर्द्वा
द्विः पेद्मातुः पद्मुः परोक्षायामिति किम् माता मीनाति
मिनोति दीङां गुणवृद्धिस्थाने मीञ् हिंसायां डुमिञ्
प्रक्षेपणे दीङ् क्षये एषामन्त्यस्य आत्वं भवति गुणवृद्धि
स्थाने प्रत्यये परे माता मास्यति दाता दास्यते श्वस्तनी ता
भविष्यन्ती स्यति स्यते अनेन आत्वं अत्र गुणः प्राप्तः वृ
द्धिस्थाने मापयति दापयति मीनन्तं प्रयुङ्क्ते एवं मिन्वन्तं
दीयमानं प्रयुङ्क्ते इन् अनेन आत्वम् अर्तिह्रीब्लीति पागमः
अनेन वृद्धिः प्राप्ता गुणवृद्धिस्थाने इति किम् मीनाति मि
नोति दीयते नाक्र्यादेः श्नः स्वादेः दिवादेर्यन् अनित्य
विकरणा इति नियमाद्गुणाभावः सनि च दीङः दीङ् क्ष
ये इत्यस्य सनि परे आत्वं भवति अगुणत्वात्पूर्वेणानासि
द्धिः उपदिदासते उपदातुमिच्छति सन् अनेन आत्वं द्वि
र्वे सन्यवर्णस्येति इत्वम् सनीति किम् उपदेदीयते अ
त्यर्थं दीयते यङ्लुक्ः स्मिजिक्रीङामिणि ष्मिङ् ईष
द्धसने जि जये डुक्रीञ् द्रव्यविनिमये इङ् अध्ययने ए
षामन्त्यस्य आत्वं भवति इणि परे विस्मापयते विजापय
ते विक्रापयते अध्यापयते विस्मयमानं प्रयुङ्क्ते एवं वि
जयमानं विक्रीणानं अधीयानं इन् अनेन आत्वम्
अर्तिह्रीतिपागमः इणीति किम् विक्रेता विजेता वि
स्मयिता सृजिदृशोरागमोकारः स्वरात्परो धु
टि गुणवृद्धिस्थाने सृज विसर्गे दृशिर् प्रेक्षणे अन

योः स्वरात्परः अकारागमोभवति गुणवृद्धिस्थाने धुटा
दौप्रत्ययेपरे स्रष्टा स्रक्ष्यति असृक्ष्यत् द्रष्टा द्रक्ष्यति अ
द्रक्ष्यत् नास्यति स्यात् अनेनआकारागमः रत्वं भ्रष्टा
दीनां षइतिजस्य षः छशोश्चेतिशस्य षः षढोः कस्सेइति
षस्य कः वृद्धिस्थाने अस्राक्षीत् अद्राक्षीत् अयदि सिच्
अकारागमः रत्वम् अस्य च दीर्घः सिचइतीट् गुणवृद्धि
स्थानेइतिकिम् सृष्टः सृष्टवान् दृष्टः दृष्टवान् निष्ठे
ति क्तः क्तवतू यण्वज्ञावादणत्वम् नवर्गस्य षटेति
तस्य ठः **दीङोयोन्तःस्वरादावगुणे** दीङ्त्ययेऽस्य
स्य स्वरादावगुणेपरे यकारागमोभवति उपदिदीये उ
पदिदीयाते उपदिदीयिरे परोक्षा प आते इरे द्विर्वक्ता
ह्रस्वः अनेनयकारागमः अगुणेइतिकिम् दानम् युट्टेति
युट् युवुकामनाकान्ताइत्यनादेशः मीनाति मिनोतिदी
नामित्यत्वम् **आलोपोऽसार्वधातुके** धातोराका
रस्यलोपोभवति स्वरादावगुणेऽसार्वधातुकेपरे पप
तुः पपुः पारस्मै अतुस् उस् द्वित्वं अनेनालोपः असा
र्वधातुकेइतिकिम् यान्ति अन्ति अन्ति लङ् **इटिच** आ
कारस्यलोपोभवति इटिपरे पपिथ ययिथ पारस्मै ।
याप्राप्तौ थल् लकारः थलिचसेटीत्यर्थः इट् अनेना
कारलोपः **दामागायतिपिबतिस्थास्यतिजहा**
**तीनामीकारोव्यञ्जनादौ** दाइतिदासंज्ञकाग्रह
णे माइतिमामाने माङ् माने मेङ्प्रणिदाने गायती
ति कैगैशब्दे गाङ्गतावितिवा पापाने ष्ठागतिनिवृत्तौ

घोऽन्तकर्मणि ओहाक् त्यागे एषां व्यञ्जनादावसार्वधातु
के अगुणे परे अन्त्यस्य ईकारो भवति दीयते धीयते मीयते
गीयते अध्यगीष्ट पीयते स्थीयते अवसीयते हीयते इङ्
अध्ययने अधिपूर्वः अद्यतनी न विभाषालुङ्लृङोरिति तत्रा
न्वात् गाङादेशः तस्यानेन ईत्वम् अन्यत्र नेयत्र अनेना
कारस्य ईत्वम् देदीयते देधीयते मेमीयते जेगीयते पे
पीयते तेष्ठीयते अवसेषीयते जेहीयते अन्यथा ददाति
दधाति माति मीमीते मयते गायति गाते पिबति ति
ष्ठति अवस्यति जहाति यथाह्वः अनेन ईत्वम् द्वित्वं गुण
तेष्ठीयिते स्थोऽभ्यासस्य शिट्परोऽघोषः निमित्तापाये
तिकस्यापः तवर्गस्य टवर्गे तिथस्य ठः अगुणे इति किम् दा
ता असार्वधातुके इति किम् गाते **आशिष्येकारः**
दादीनामन्त्यस्य एकारो भवति आशिषि अगुणे परे
तः देयात् धेयात् मेयात् गेयात् पेयात् स्थेयात् अव
सेयात् हेयात् आशीर्यात् अनेनाकारस्य एकारः अगुण
यामिति किम् दासीष्ट **अनउस्सिजभ्यस्तविदाभ्यो
भुवः** सिचः अभ्यस्तात् विदः आकारान्ताद्धातोः पर
स्य अनः अन्यस्य उसादेशो भवति अभुवः भुवः पर
स्मात् सिचः परमन्यं वर्जयित्वा सिचः अकार्षुः अला
विषुः अभैत्सुः हान् लून् भिद् अन् सिच् लनइट् हस
न्तोहभ्र इति इड्भावः भिदसादिभिदीति इड्भावः सि
चि परस्मा इति हाद्धिः अनेन अनउस् अघोषेच शिटामि
ति दस्यतः अभ्यस्तात् अबिभयुः अजागरुः त्रिभी भये

जागृनिद्राक्षये अजागृत् भियोऽग्रहो ण्यादेश्चेतिलङि द्वित्वं
जाग्रोऽदादेर्लङि अन उस् अभ्यस्तानाद्दसीति जुसः विदः
अविदुः विद् अन् अन्ति लङ् अन उस् आकारान्तात् अदुः
अदः या प्रापणे दाणदाने ह्यस्तनी अन् अन्ति लङ् अन उस्
आकारस्योसीत्यालोपः सर्वत्राड्डात्वादिः अभूवइतिकिम्
अभूवन् भूसत्तायां अद्यतनी अन् सिच् इण्स्थादापिबतीति
सिज्लोपः भुवोवोन्तइतिवकारागमः इचस्तलोपः इचः
परस्यतप्रत्ययस्यलोपोभवति अकारि अपाठि कृञ् पठ्।
अद्यतन्यात्मनेपदं त भावकर्मणोश्चेतीच् अस्योपधेतिदी
र्घः अनेनतलोपः चकारइत्यर्थः अह्नात्यादिः हेरकारा
द्धन्तेः अकारात्परस्य हेर्लोपोभवति अहनोः हनहिंसा
गत्योरित्यस्मात्परस्य हेर्लोपोनभवतीत्यर्थः पच पठ पञ्चमी
हि अन्ति अनेनहिलोपः अहन्तेरितिकिम् जहि हन् हि अ
न्ति लङ् हन्तेर्जहाविति हन्तेर्जः नोश्चविकरणादसं
योगात् असंयोगात् उरेनवर्णोनाऽसंज्ञकात् नोर्विक
कर णात्परस्य हेर्लोपोभवति चिञ् स्नु चिनु चये
षुञ् अभिषवे हि उःस्थादेः अनेनहिलोपः असंयोगादिति
किम् राप्नुहि तक्ष्णुहि राध साध संसिद्धौ तक्षूत्वक्षूतनूक
रणे हिविकरणः नोर्विकरणादितिकिम् उदिहि एउस्तनो
श्नोनः हि अन्ति लङ् उकाराच्च उकाराच्च विकरणा
त्परस्य हेर्लोपोभवति उरु तनु कृञ् तनुविस्तारे हि।
तनादेरुः करोतेरिति कृञोगुणः अस्योकारः विकर
णादितिकिम् श्रुहि श्रमि अपो हि अन्ति लङ् उकार
लोपोवमोर्वा उकारलोपोवाभवति वकारमकार

योःपरयोः सन्वः सनुवः सन्मः सनुमः तन्वः तनुवः तन्मः
तनुमः अनेनवाउकारलोपः असंयुक्तस्येतिकिम् राध्नुवः
राध्नुमः **करोतेर्नित्यम्** कृञःपरस्य विकरणस्य लोपो भ
वति कुर्वः कुर्मः वस् मस् अनेन उपकारलोपः **समभ्या**
**येच** करोतेः समभ्यां यकारे परे उकारलोपो भवति कुर्यात्
कुर्यातामू कुर्युः समभीयात् यातामू यस् अनेन उपकार
लोपः येइतिकिम् कुर्वीत सम्भमीईत **अस्योकारःसार्व**
**धातुकेगुणे** करोतेरकारस्य उकारादेशो भवति अगुणे
सार्वधातुकेपरे कुरुतः कुर्यात् कुरुताम् अकुरुत कृन्व
तमानानाम् समभीयात् पञ्चमीनाम् ह्यस्तनीत उनादेशः
करोतेरितिगुणः छित्वकृत्वयोश्च परस्मै इति गुणाभावः
अनेन अकारस्य उकारः अगुणे इतिकिम् करोति **रुधादेर्वि**
**करणान्नलोपः** रुधादेर्गणस्य यो विकरणः स्वरात्परो
नशब्दस्तस्य अल्लोपो भवति अगुणे सार्वधातुकेपरे रु
न्धः रुन्धन्ति रुन्ध्यात् भिन्तः भिन्दन्ति भिन्द्यात् रुधिर् आ
वरणे भिदिर् विदारणे नस् अन्ति यात् स्वराद्रुधादेः परो
नाशाह्: तस्मानेना नलोपः चढधभेभ्यइति हंडेइत्यन्तस्य यः प्रत्ययतीयश्च।
तर्थेइतिथस्यदः अगुणेइतिकिम् रुणद्धि भिनत्ति भेत्तावालीम् **आ**।
**लेरादेः** असभुवीत्यास्यागुणे सार्वधातुकेपरे आदेर्लोपो भव।
ति स्तः सन्ति तस् अन्ति अस्ति इत्यत्र अनेनादिलोपः अगु
णेइतिकिम् अस्ति **अभ्यस्तानामाकारस्य** अभ्यस्ता
नामगुणे सार्वधातुकेपरे आकारस्य लोपो भवति जहति
मिमते डोदाञ्दाने माङ्माने अन्ति अन्ते अनि ददात्या

देश्चेतिलुक् जुहोत्यादीनामितिद्वित्वे भृञामित्‌हाङ्माङामिदितीत्व
म् अनेनआलोपः लोपोस्यस्नादन्तीतिनलोपः एवंदद्याति द
यात् दध्यात् अगुणेइतिकिम् जहाति ददाति **क्र्यादीनां**
**विकरणस्य** डुक्रीञ्द्रव्यविनिमयेक्र्यादीनांविकरणस्य अ
कारलोपोभवति अगुणेसार्वधातुकेपरे क्रीणन्ति क्रीणते
लुनंति लुनते अन्ति अन्ते नाक्र्यादेः अनेनआलोपः आत्मने
चानकारादितिनलोपः लूञः प्वादीनांह्रस्वः अगुणेइतिकि
म् क्रीणाति लुनाति **उभयेषामीकारोव्यञ्जनादा**
**वदः** उभयेषामभ्यस्तानांक्र्यादिविकरणस्य च आकारस्य
ईकारोभवति व्यञ्जनादावगुणेसार्वधातुकेपरे अदः दा
सञ्ज्ञकान्वर्जयित्वा जिहीते जिहीताम् अजिहीत मिमीते
मिमीताम् अमिमीत ओहाङ् गतौ माङ्माने वर्त्तते प
चमीताम् हयन्तनी त अन्वि लुक् द्वित्वे भृञामित्‌हाङ्माङामि
दिति अभ्यासस्यइत्वम् अनेनाकारस्यईत्वम् क्रीणीतः क्री
णीते क्रीणीहि मञ्जीवितमेवपणम् लुनीतः लुनीते लु
नीहिनन्दनम् तस् ते हि नाक्र्यादेः अनेनाकारस्यईत्वम्
लूञोह्रस्वः अदइतिकिम् दत्तः धत्तः दात् धात् तस् थ
स् अन्ति लुक् जुहोत्यादीनामितिद्वित्वे ह्रस्वः धाञः द्विती
यचतुर्थयोरितिधस्यदः तस्य तथोश्चदधातेरितिधः अभ्य
स्तानामाकारस्येत्यालोपः अघोषेप्रथमोशिटामितितः अगुणे
इतिकिम् जहाति क्रीणाति **इकारोदरिद्रातेः** दरिद्रा
दुर्गतावित्यस्य व्यञ्जनादावगुणे सार्वधातुकेपरे आका
रस्य इकारोभवति ईकारःप्राप्तः दरिद्रितः दरिद्रिमः ता

स् मस् अन्विलुक् अनेन इत्वम् अगुणेइतिकिम् दरिद्राति
लोपः सप्तम्यां जहातेः ओंहाक् त्यागे इत्यस्य सप्तम्यां पर
तः आकारस्य लोपो भवति जह्यात् सप्तम्यामिति किम् जहा
ति अटि हन्तेः सार्वधातुके हन्तेरन्तलोपो भवति अगु
णावटो सार्वधातुके परे हतः हथः हन् थस् अन्वि लुक्
अनेनान्तलोपः अटीतिकिम् हन्वः हन्मः अगुणेइतिकिम्
हन्ति हंसि शासेरिदुपधाया अण्व्यञ्जनयोः शास् अनु
शिष्टावित्यस्य धातोर्व्यञ्जनादौ चागुणे प्रत्यये परे उपधाया इत्वं भ
वति अन्वशिषत् अन्वशिषताम् अन्वशिषन् अद्यतनी दि ता
म् अन् पुषादित्वादङ् अनेनाकारस्य इत्वम् शासिवसिघसी
तिषः शिष्यते शिष्टा शिष्मः ते शास् वस् मस् अन्विलुक् अ
नेन इत्वम् षत्वं सस्य षः अण्व्यञ्जनयोरितिकिम् शासति
अन्ति अन्वि लुक् लोपोऽभ्यस्तादिति नलोपः अगुणेइतिकिम्
शास्ति हन्तेर्जहौ हन हिंसागत्योरित्यस्य हौ परे ज आदेशो भ
वति जहि नीलकुसुमवाससम् अन्वि लुक् अनेन ज आदेशः
हाविति किम् हंसि दास्थोरभ्यासलोपश्च दासंज्ञकानां
अस्तेश्च हौ परे एत्वं भवति अभ्यासलोपश्च देहि धेहि दा धा
हि अन्वि लुक् द्वित्वे अनेन आकारस्य एत्वम् अभ्यासलोपश्च
अस्तेः एधि अस् हि अन्विलुक् असेरादेरिति अकारलोपः
अनेन एत्वम् असेरितिहेर्धिः हाविति किम् ददाति अस्ति
असेरेकव्यञ्जनमध्येऽनादेशादेः परोक्षायाम् अनादे
शादेर्धातोरेकव्यञ्जनमध्ये केवलयोर्व्यञ्जनयोर्मध्ये यः अ
कारस्तस्य एत्वं भवति अभ्यासलोपश्च अगुणायां परोक्षायां

ग्रस्याम् पेचतुः पेचुः शेकतुः शेकुः मचू शक्ल ग्रवस् उस् प
रोक्षायांचेति अगुणत्वम् द्वित्वं अनेनएत्वाभ्यासलोपौ थलि च
सेटि अनादेशादेर्धातोः केवलयोर्व्यञ्जनयोर्मध्ये यः अकारस्त
स्यथलि सेटिपरे एत्वंभवति अभ्यासलोपश्च पेचिथ शेकिथ
कृसृभृवृस्तुद्रुस्रुश्रुव एवपरोक्षायामितिनियमादिट् **तॄ
फलभजत्रपश्रन्थिग्रन्थिदम्भीनांच** तॄप्लवनतरणयोः
फलनिष्पत्तौ भज सेवायाम् त्रपूष् लज्जायाम् श्रन्थ ग्रन्थ स
न्दर्भे दम्भु दम्भे एषामकारस्यएत्वंभवति अभ्यासलोपश्चप
रोक्षायामगुणायां थलिसेटिपरे तेरतुः तेरुः तेरिथ ऋद
न्तानांचेतिगुणः फेलतुः फेलुः फेलिथ भेजतुः भेजुः भेजिथ
त्रे पे त्रेपाते त्रेपिरे श्रेथतुः श्रेथुः श्रेथिथ ग्रेथतुः ग्रेथुः ग्रेथिथ
देभतुः देभुः देभिथ श्रन्थि ग्रन्थि दम्भीनां परोक्षायामनि
श्रन्थि ग्रन्थीति अनुषङ्गलोपः थलि चेति थलिपरे अनुषङ्गलो
पः **नशसददवादिगुणानाम्** शसु हिंसायां दद दाने
अनयोः वकारादीनां धातूनां गुणिनां कृतगुणानांच परो
क्षायामगुणायांथलिसेटिचपरे एत्वाभ्यासलोपौनभवतः
विशशसतुः विशशसुः विशशसिथ दददे दददाते दददि
रे ववमतुः ववमुः ववमिथ ववलतुः ववलुः ववलिथ डुव
मु उद्गिरणे वल वल्ल संवरणे गुणिनांयथा निपपरतुः निप
परुः निपपरिथ विददरतुः विददरुः विददरिथ दृ पालनपू
रणयोः दृ विदारणे ऋदन्तानांचेतिगुणः **स्वरादाविवर्णो
वर्णान्तस्यधातोरियुवौ** इवर्णान्तस्यउवर्णान्तस्यचधा
तोरि वोर्णावर्णयोर्यथा संख्यं इय् उव् इत्येतावादेशौ भव

तः अगुणोस्वरादौप्रत्ययेपरे शिश्रियतुः शिश्रियुः चिक्षियतुः चि-
क्षियुः चिक्रियतुः जुहुवतुः जुहुवुः लुलुवतुः लुलुवुः श्रिञ् से
वायाम् क्षिनिवासगत्योः डुक्रीञ् द्रव्यविनिमये हुदानादनयो
लूञ् छेदने परोक्षायां अतुस् उस् द्विर्वे अनेनइयु उवुसि
यन्ति वियन्ति स्नुवन्ति श्रुवन्ति क्षिनिवासगत्योः क्षीणाति क्ष
क्षि अञ्जनकान्त्यसनखादनेषु ष्णुञ् स्नुतौ धात्वादेः षः सः
ष्णोतीनत्वयोः सनिइतिज्ञापकात् टस्यतः अन्ति आन्विति
यस्तुदादेरनीत्यप्राप्तम् अन्येषांतु अनेनइयुवौ स्वरा
दाविति किम् क्षीयात् स्नूयात् आशीर्यात् नाम्यन्तानांय
लायीतिदीर्घः अगुणइतिकिम् आयिता लविता अस्तनी
ता इइयुणः इवर्णोव र्णान्तस्येतिकिम् चक्रतुः धातो
रितिकिंकुर्वन्ति अत्रधातोर्नउकारः किन्त्वविकरणस्य अ
**भ्यासस्यासवर्णे** अभ्यासस्यहौ इवर्णोवर्णौ तयोर्यथा
संख्यं इयु उव् इत्येतावादेशौभवतः असवर्णेस्वरेपरे इ
येष उवोष इषइच्छायां उषदाहे परोक्षाअट् उपधायाः
द्विर्वह्रस्वः अनेनइयु उवौ इयुति अतसगतौ अति आति श
ह्वोत्यादेश्चेतिलक्ष्य जक्षोत्यादीनामिति द्विर्वे अकारस्यत्व
र्णस्येति सकारः तस्यअर्ति पिपत्योश्चेति इत्वम् तस्यानेन
इय् यत्वम् लोपोभ्यस्तादन्तिनइतिनलोपः असवर्णइति
किम् ईजतुः ईजुः ऊपतुः ऊपुः यजदेवताः डुवपबीजस
न्ताने अतुस् उस् स्वपिवचीतिसंप्र इइ उउ द्विर्वे दीर्घपर
लोपौ स्वरेइतिकिम् इयाज उवाप अट् द्विर्वपरोक्षायाम
भ्यासस्येतिसंप्र **नोर्विकरणस्य** विकरणस्यनोर्यउवर्णे

तस्य उव् आदेशो भवति अगुणे स्वरादौ प्रत्यये परे आप्नुवन्ति
शक्नुवन्ति आप्नुयाम् शक्नुवानौ लकारः उवादीत्यर्थः अ
न्ति नुः स्वादेः तस्यानेन उव् असंयुक्तस्य नुविकरणस्य नोर्व
कार इति वकारो वक्ष्यते इह संयुक्त उदाहरणः नो विति किम्
कुर्वन्ति कृञ् करणे तनादेः करोतेरिति गुणः अस्योकारः
सार्वधातुके गुणे इति उत्वम् वक्ष्यमाणः विकरणस्येति किम्
नुवन्ति स्वरादाविति किम् शक्नुयात् सप्तमीयात् अगुणे इ
ति किम् शक्नवानि उः स्वादेः गुणः **य इवर्णस्यासंयोगपू
र्वस्यानेकाक्षरस्य** अनेकाक्षरस्यानेकस्वरस्य धातोर्य इवर्णः
असंयोगपूर्वः यस्मात्संयोगः पूर्वो नास्ति तस्य यकारादेशो
भवति अगुणे स्वरादौ प्रत्यये परे इयुवोर्बाधः चिक्यतुः चि
क्युः निन्यतुः निन्युः चिञ् चये णीञ् प्रापणे णोनः अतुस्
उस् द्विर्यो ह्रस्वः कृतद्विर्वचनस्यानेकाक्षरत्वादिवर्णस्य
यत्वम् इवर्णस्य किम् लुलुवतुः लुलुवुः असंयोगपूर्वस्य
किम् शिश्रियतुः शिश्रियुः टुओश्वि गतिवृद्ध्योः शुश्वतुः शु
शुवत्वाद शुशुवुरित्यर्थः ओकारः त्वादौ द शुशुवत्वादित्यर्थः अ
तुस् उस् शिश्वि च अभ्यासस्यादिव्यञ्जनमित्यनादिव्यञ्ज
नलोपः स्वरादाविवर्णोवर्णान्तेति इयुः अनेकाक्षरस्येति किम्
धियति धियारतो ति अखि तुदादेरणीत्यगुणत्वम् अगुण
इति किम् निनयिथ परोक्षा थल् लकारः थलि च सेटीत्यर्थः इ
ङ् **इणश्च** इण् गतौ इत्यस्य स्वरादावगुणे परे यत्वं भवति इ
यायतुः यन्ति यन्तु अन्ति अदादेर्लुक् णकारः इणो गत्य
र्थः अगुणे इति किम् अयानि इण् पञ्चमी आनि गुणः स्वरा

दावितिकिम् इनः श्नोर्वेकारो विकरणस्य विकरणस्य नो
र्थे उवर्णस्यास्य असंयोगपूर्वस्य वकारादेशो भवति स्वरादौ
गुणेपरे चिन्वन्ति सुन्वन्ति नोर्विकरणस्येति उवूञामः विकरण
स्येतिकिम् तुवन्ति एतस्यैतोणोल्नः वर्त्तमानाआन्ति आन्वि अ
दादेस्तुक् स्वरादाविवर्णोरुवू असंयोगपूर्वस्येतिकिम् श
भुवन्ति तथ वाथ संसिद्धौ अदेर्नेः सार्वधातुके अदाना
दनयोरित्यस्य अयोर्णस्वरादौ सार्वधातुकेपरे उवर्णस्यव
त्वंभवति जुह्वति जुह्वतु आन्ति अलुलोपोभ्यस्तादन्ति नइ
तिनलोपः अदेर्नेरितिकिम् अवन्ति आमिश्रतो पूर्वेणउवू
अगुणे इतिकिम् जुहवानि सार्वधातुके किम् जुहुवुः भुवो
वोन्तः परोक्षाद्यतन्योः अगुणे इतिनिवृत्तं भवतेः परो
क्षाद्यतन्योः स्वरयोः परयोः वकारागमोभवति बभूव ब
भूवतुः बभूवुः अट् अतुस् उस् द्वित्वं भवतेरइत्यभ्यासस्या
कारः अनेनवकारागमः अद्यतन्यायथा अभूवन् अभूवम्
अन् अम् अडात्वादिः सिच् तस्य इएयादापिवाति भूस्थः सि
चः परस्मै इतिलुक् अनेनवागमः स्वरयोरितिकिं अभूव अ
भूम अद्यतनी . वस आगदासिद्धो लुक् भुवः सिज्लुकीतीड्भा
वः गोहेरूदुपधायाः गुहू संवरणे इत्यस्य गुणे कृते उप
धाया ऊकारोभवति गूहयति गूहन्तं प्रगूहेन् उपधाग्र
णः अनेनऊत्वम् दुषेः कारिते दुषवैकृत्ये इत्यस्य उप
धायाऊत्वंभवति कारितेपरे दूषयति दूषयन्तं प्रादूदुषत्
नऊत्वं कारिते इतिकिम् दोषा दुदुषावितिस्त्वच् तवर्गस्य
वर्णे तिनस्य टः उपधाग्रणः वाचित्तविरागे दुषेः उपदा

याः कारिते परे ह्रस्वो वा भवति चित्तविरागे गम्यमाने वि
दूषयति दोषयति वा चित्तं संपादयतीत्यर्थः॥ मानबन्धानां
ह्रस्वः॥ घटचेष्टायामित्यत आरभ्य ष्टमवैक्लव्य इति यावत्
ये धातवः अमानुबन्धा अपि मानुबन्धाः कार्यार्थं पूर्वाचार्यैः प्र
तिज्ञाताः तेषामुपधायाः कारिते परे ह्रस्वो भवति घटयति प्र
थयति व्यथयति घटचेष्टायां प्रथ प्रख्याने व्यथ भयचलनयोः
घटमानं प्रयुङ्क्ते प्रथमानं व्यथमानं धातोश्च हेतावितीन् अ
स्योपधेति दीर्घः तस्यानेन ह्रस्वः एवं रजयति मृगान् रञ्ज
रागे रज्यन्तं प्रयुङ्क्ते इतीन् रञ्जेर्णौ मृगरमणे इति तद्बल
वादनुषङ्गलोपः दीर्घे कृते जनीजॄष्क्नसुरञ्जोऽमन्ताश्चेति मा
नुबन्धत्वादनेन ह्रस्वः गमयति शमयति गम्लृ गतौ शमु उ
पशमे शाम्यन्तं प्रयुङ्क्ते इतीन् अस्योपधेति दीर्घः अनेन ह्र
स्वः **इचि वा** मानुबन्धानां इच्यपि उपधाया ह्रस्वो वा भ
वति अघटि अघाटि अव्यथि अव्याथि अप्रथि अप्राथि घ
टचे व्यथभय प्रथप्र घटमानः प्रायोजि व्यथमानः प्रथ
मानः धातोश्च हेतावितीन् अद्यतनी त अह्वात्वादि भाव
कर्मणोश्चेति इच् अस्योपधेति दीर्घः तस्यानेन वा ह्रस्वः का
रितस्यानामिड्विकरणे इति कारितलोपः इचस्तलोपः का
रित इति किम् समघाटि चैत्रेण उपधादीर्घः **जनिवध्योश्च**
जन जनने जनी प्रादुर्भावे इति वा हन हिंसागत्योरित्यनयो
रुपधाया ह्रस्वो भवति इचि परे अजनि अद्यत दीपजनबुध
पूरितायिप्यायिभ्योऽन्यतरस्यामिति कर्तरि भावे वा इच् अ
वधि हन हिंसागत्योः अद्यत इच् अद्यतन्यां चेति हन्तेः वधा

देशः अस्योपधेतिदीर्घः अनेनह्रस्वः ओदौद्भ्यां यिन्नायीस्व
रवत् ओकारौकाराभ्यां परो यिन् आयिरित्येतौ स्वरवद्भवतः
स्वरे परे अव् आवौ उक्तौ तौ यिन्नायोरपि भवत इत्यर्थः यथा
गोरिवमत्रनेष्यते गव्यति गव्यते नाव्यति नाव्यते गामिच्छ
त्यनइति नावमात्मेच्छायां यिन् गौरिवाचरति कर्तुरायिः
सलोपश्चेति आयिः एवं नावमिच्छत्यात्मनः नौरिवाचरते ना
मिव्यञ्जनान्तादायेरादेरित्याकारलोपः आयन्ताच्चेत्यात्मने
पदं ते अपि नाम्यन्तानां यणायियिन्नाशीश्चेक्रीयितेषु
धेदीर्घः नाम्यन्तानां धातूनां लिङ्गानां च यणि आयौ आशि
षियकारे चेक्रीयिते परे अन्त्यस्य दीर्घो भवति यणि चीयते
स्तूयते आयौ अग्नीयते पटूयते चिञ् चये ष्टुञ् स्तुतौ वर्त
मानाते सार्वधातुके यण् अनेन दीर्घः अग्निरिव आचरति
पटुरिवाचरति कर्तुरायिः सलोपश्चेत्यायिः नामिव्यञ्जना
न्तादायेरादेरित्यालोपः अनेनदीर्घः अग्नीयति पटूयति यि
नि अग्निमिच्छत्यात्मनः एवं पटुं नाम्न आत्मेच्छायां यिन् इकार
नकारौ यिन्सवर्णास्येत्यर्थौ अनेनदीर्घः ति अपि आशीषिची
यात् स्तूयात् आशीर्यात् दीर्घः चेक्रीयिते चेचीयते तोष्टू
यते अत्यर्थं चिनोति रौति यथाहः धातोरेकस्वरादिति यथा
द्वः अनेनदीर्घः द्विर्वचनश्चेक्रीयिते नाम्यन्तानामिति किम्
चिकीर्षति कृञ् करणे सिषात् धातोर्वा कर्मणः इति सन् स्व
रान्तानां सनीति दीर्घः ऋदन्तस्येरगुण इतीर् नामिनोर्वोर
कुर्छुरो व्यञ्जने इति दीर्घः कीर् द्विर्वं अभ्यासकार्यम्
चिकीर्ष इति स्थिते आशीर्यात् अस्य च लोपः धे इति किम्

वे सीष्ट इणोऽनुपसृष्टस्य इण्गतावित्यस्य अनुपसृष्टस्य उ
पसर्गरहितस्य दीर्घो भवति यकि आशीर्यकारे च परे ईयते ईया
त् अनुपसृष्टस्येति किम् निरियते समियात् इण्गतौ निर्
गम् पूर्वो यकाशिषोरिति किम् इयात् समीयात् यक
इति किम् एतीष्ट आम् सह इणा आशीरात्मनेपदे सीष्ट **ऋत**
**ईद्यक्चेक्रीयितयगादिषु** ऋतः ऋकारान्ताद्धातोर्लिङ्ग
स्य ईकारागमो भवति चेक्रीयिते यगि आशीर्ये च परे चेक्रीयिते
चेक्रीयते अत्यर्थं करोति इवति यथाहुः अनेन ईकारागमः रव
म् द्वित्वं अभ्यासकार्यम् यगि कर्त्रीयति कर्तारमिच्छत्या
त्मनः नामात्मनेच्छायां यिन् आयौ कर्त्रीयते कर्ता इवाच
रति कार्त्रीयिः सलोपश्चेत्याधिः नामिव्यञ्जनान्तादित्याधेर
लोपः **रिङ्शयग्लिङ्क्षु** ऋकारान्ताद्धातोः शप्रत्यये अनि च विकरणे परे रि
कारागमो भवति आद्रियते आध्रियते म्रियते ध्रियते दृङ् आदरे
धृङ् अवस्थाने मृङ् प्राणत्यागे दृङ् व्यायामे ते आन्वितदादेरनि
इत्यत्राणत्वम् अनेन रिकारागमः स्वरादाविवर्णोवर्णान्तस्य
धातोरियुवौ इयङ् अनीति किम् ददे परोक्षा ए द्वित्वे अकारस्य
वर्णस्येति अकारः अशतोइति किम् दधति **यकाशिषो**
**रेः** ऋकारान्तस्य धातो रिकारागमो भवति यकि आशीर्य
कारे च परे क्रियते क्रियात् ह्रियते ह्रियात् यकाशिषोरि
ति किम् कार्यम् ऋवर्णव्यञ्जनान्ताद्ध्यण् णकार इत्संज्ञा
र्थः इत्संज्ञा वाहृद्धिः यक इति किं कृषीष्ट **गुणोऽर्तिसंयोगा**
**द्योः** ऋगतिप्रापणयोः ऋस्वृगतावितिवा अनयोः सं
योगादेश्च ऋकारस्य गुणो भवति यकि आशीर्यकारे च परे

अर्यते स्मर्यते अर्यात् स्मर्यात् ऋगतौ स्मृचिन्तायां यङितिकि
म् समस्वरीष्ट संस्वरिषीष्ट समोगम्यृच्छि प्रच्छि स्वृभ्य श्चविदि
दृशभ्य इत्यात्मनेपदम् **चेक्रीयिते च** अर्त्तेः संयोगादेश्च
ऋकारस्य गुणो भवति चेक्रीयिते परे अरार्यते ऋगति प्रा
पणयोः ऋ इत्स्य गताविति वा कुटिलस्य गति इयर्तीवा स्मृचि
स्मृत्रि स्मृत्रि ऋट अटि अस्नू ऊर्णुञ् इति यथाहुः अनेन गुणः
स्वरादेर्द्वितीयस्येतिर्य द्विर्वे अनादिव्यञ्जनलोपः दीर्घोनागम
नस्येत्यभ्यासस्य दीर्घः संयोगादेर्यथा सास्वर्यते स्वयाह अप
र्थे स्वरति यथाहुः गुणः स्वृद्विर्वे अभ्यासकार्यं प्राग्वद्दीर्घः ॥
**घ्राध्मोरी** घ्राग्न्धोपादाने ध्मा शब्दाग्निसंयोगयोरित्येतयो
रन्त्यस्य ईत्वं भवति चेक्रीयिते जेघ्रीयते देध्मीयते अत्यर्थं पु
अतिशयमति यथाहुः अनेन ईत्वम् चेक्रीयिते किम् घ्रायते
ध्मायते **यिन्यवर्णस्य** अवर्णस्य यिनि परे ईत्वं भवति पुत्री
यति मालीयति पुत्रमिच्छत्यात्मनः यिन् इकारनकारावित्
र्थौ अनेन ईत्वम् यिनीतिकिम् शुभकाम्यति अवर्णस्येति कि
म् रायमिच्छत्यात्मनः रैयति **अदेर्घस्लृ सन्नद्यतन्योः**
अदभक्षणे इत्यस्य घस्लृ आदेशो भवति सन्यद्यतन्यां च पर
तः लृकारः सुखदीर्घार्थः जिघत्सति अघसत् अत्तुमिच्छती
ति वा क्लीबकर्त्रर्थं तावां कर्मणो इति सन् अद्यदि पुषादिसूत्रेण
अण् अनेन धातोर्घस्लृ आदेशः सनि द्विर्वे अभ्यासकार्यम्
सनद्यतन्योरितिकिम् अत्ति अन्निलब्ध अत्योपेधाघीटाग्रद्य
मस्तिदस्यतः **वा परोक्षायाम्** अदेः परोक्षायां परस्यां च
घस्लृ आदेशो वा भवति जघास जक्षतुः जक्षुः अद अदतुः उ

स् घस्लआदेशः द्वित्वं अटि उपदादीर्घः अन्यत्रगमहनजन
खनघसामुपधायाइति उपधालोपः अद्दोघेघाशीरामितिद्य
स्यकः शासिवसिघसीनांचेतिसस्यषः पक्षे आद आदतुः आ
दुः अस्यादेः सर्वत्रेतिदीर्घः दीर्घोत्परलोपः परोक्षायामितिकि
म् अन्ना अन्नता आम्बत्तः **वेञोवयिः** वेञ्तन्तु सन्तानेइ
त्यस्य परोक्षायांपरस्यां वयिआदेशोवाभवति इकार उच्चार
णार्थः उवाय ऊयतुः ऊयुः पक्षे ऊवतुः ऊवुः वस्यान्यतरस्यां
किति इतिनत्वान्तरात् यस्यवः ग्रहिज्येतिसंप्र अटिपरोक्षायां
मभ्यासस्येत्यभ्यासस्यसंप्र ववौ ववतुः ववुः सन्ध्यक्षरान्तानामा
कारः द्वित्वं अटअकारादटडो अन्त्यालोपोसार्वधातुकेइति द्वि
र्वचनेकृतेआलोपः नवेञश्चोरञ्गणोचेति संप्रसारणाभावः प
रोक्षायामितिकिम् वाता **हनोवधिराशिषि** हनहिंसाग
त्योरित्यस्यआशिषिपरस्यांवधिआदेशोभवति इकार उच्चा
रणार्थः वध्यात् वध्यास्ताम् वध्यासुः आशिषीतिकिम् ज
घान अट् अभ्यासाञ्चेतिहस्यघः **अद्यतन्यांच** हनहिंसा
गत्योरित्यस्य अद्यतन्यांच परस्यांवधिआदेशोभवति अव
धीत् अवधिष्टाम् अवधिषुः अद्यतनी दिनास् अन् अनेनव
धिआदेशःसिच् इट् एकत्वेसिचइतिईट् इटईटीति इतिसिचो
लोपः अन उस् घत्वम् तवर्गस्यषटवर्गाद्दवर्गइतितस्य ट
त्वम् सेटोवाइति दीर्घोत्र नेष्यते **इणोगाः** इणगतावि
त्यस्यगाआदेशोभवति अद्यतन्यांपरतः अगात् अगाता
म् अयुःणाकारइकार्थः अयादिताम् अत् सिच् इणस्थादा
पिबतिभूभ्यः सिचःपरस्मैइतिसिज्लोपः अनेनगाआदेशः

अनउस् आकारस्योसि इत्याकारलोपः अद्यतन्यामिति किम् इ
याय अङ् द्विर्हलादिः अभ्यासस्यासवर्णे इत्यभ्यासस्येय्" इ
ङः परोक्षायाम्" इङ् अध्ययने इत्यस्य गाआदेशो भवति प
रोक्षायां परतः अधिजगे अधिजगाते अधिजगिरे अनेन गा
आदेशः द्वित्वं आलोपो सार्वधातुके इति आलोपः **सनीणि
ङोर्गमिः** इणतोः इङ् अध्ययने इत्येतयोः गमिआदेशो
भवति सनि परे इकार उच्चारणार्थः जिगमिषति जिगमिष
तः जिगमिषंति एतुमिच्छति इच्छतः इच्छंति सन् अनेन ग
मिआदेशः सेगमः परस्मै इति इट् अधिजिगांसते अधिजि
गांसेते अधिजिगांसन्ते अध्येतुमिच्छतीति सन् अनेन गमि
आदेशः हनिगमिङोः सुपधायाः इत्युपधादीर्घः मनोरनुस्वा
रो धुटि इत्यनुस्वारः आते आथे इति च आते इत्याकारस्य इत्वं अ
कारेऽसन्ध्यक्षरलोपः सनीति किम् एति अधीते अन्विलुक् इ
णोगुणः इङः सर्वत्रात्मने इति गुणाभावः **अस्तेर्भूरसार्व
धातुके** अस भुवीत्यस्य भूआदेशो भवति असार्वधातुके
परे अभूत् बभूव भविता भवितुम् भवितव्यम् असार्व
धातुके इति किम् अस्ति स्यात् अस्तु आसीत् सन्नस्यास्ते
रादेरित्यकारलोपः द्यस्त्यादिप्रत्यये अस्तेर्दिस्योः इति ईट्
अस्तेरित्यकारस्य आकारः अन्वि अदादेर्लुक् सर्वत्र **ब्रुवो व
चिः** ब्रूञ् व्यक्तायां वाचीत्यस्य असार्वधातुकविषये वचि आ
देशो भवति इकार उच्चारणार्थः अवोचत् उवाच वक्ता उच्या
त् वक्ष्यति अवक्ष्यत् ब्रूञ् व्यक्तायां वाचि अद्यतनी दि अने
न वच् आदेशः अस्यतिवचीत्यङ् आगिवचेरो उपधायाः

सुपधायाओत्वम् अटिपरोक्षायामभ्यासस्योभयेषामित्यभ्यास स्यकंत्र अन्यत्र पचिवचीतीडभावः असार्वधातुकेकिम् ब्रवीति ब्रूयात् ब्रवीत अब्रवीत् अन्विलक्षु ब्रुव ईट्वचनादिरिति ईडागमः यान्ययेईत् अगुणत्वात् **चक्षिङः ख्याञ्** चक्षिङ् व्यक्तायांवाचिइत्यस्य ख्याञ् आदेशोभवति असार्वधातुविषये आख्यत् आख्यत आचख्यौ आचख्ये आख्याता २ आख्यास्यति आख्यास्यते आख्यास्यत् आख्यास्यत आख्यतन्यामण स्यवचिख्यातिलिपिसिचिह्व इत्यण् आलोपोसार्वधातुकइत्यालोपः असार्वधातुकेकिम् आचष्टे अन्विलक्षु स्कोःसंयोगाद्योरन्तेचेतिकलोपः तवर्गस्यषटेतिनस्यटः **वापरोक्षायाम्** चक्षिङःपरोक्षायांविषये ख्याञ् आदेशोवाभवति आचख्यौ आचख्ये आचचक्षे अद् प **अजेर्वी** अजगतिक्षेपणयोरित्यस्य असार्वधातुकविषयेवीआदेशोभवति वेता वेष्यति अवेष्यत् सप्तमी ना भविष्यन्तीस्यति क्रियातिपत्तिःस्यात् अद्यतनादिः अनेनवीआदेशःगुणःषत्वम् असार्वधातुकेकिम् अजति **अदादेर्लुग्विकरणस्य** अदादिगणपठितेभ्योधातुभ्यः परस्यविकरणस्यलुक् भवतिद्वित्व बहुत्वयोरपरस्मै इतिद्वित्वेगुणाभावः विकरणस्येतिकिम् अयते **जुहोत्यादेश्च** जुहोत्यादिगणपठितेभ्योधातुभ्यःपरस्यविकरणस्यश्लुर्भवति जुहोति ददाति बिभर्ति अदा उदाञ् डुभृञ् धारणपोषणयोः अन्वितस्यानेनलुक् जुहोत्यादीनांसार्वधातुके इतिद्वित्वं होजः ह्रस्वः भस्त्राञ्जामित् द्वितीयचतुर्थयोरितिभस्यबः वि

कवलास्येतिकिम् हूयन्ते यएा नाम्यन्तानामितिदीर्घः वाचेक्री

यितस्य चेक्रीयितस्यवालुग्भवति बोभवीति बोभोति अन्त्य

र्थ्रभवति इतिवाकोक्ते धातोरेकस्वरादितियघाङ्ः तस्याने

नलुक् चिरंफोवलकीतिज्ञापकात् चरापरोहेतिद्विर्वं गुरा

श्चेक्रीयितइतिगुणः द्वितीयचतुर्थयोरितिसस्यबः चर्करी

तंपरस्मैपदमिति वर्तते अन्विलुक् यङोवा इतितन्त्रान्तरा

द्वाईङ् गुणः पते बोभूयते अवि इरास्थादापिबति भूभ्यः

सिचःपरस्मै इराग‍तौष्ठागतितिष्ठतौदाइतिदासंज्ञकस्य

ते पिबतीतिपाधाने भूसत्तायां अस्तेर्भूर्वा पभ्यःपरस्यसि

चः परस्मैपदेपरेलुग्भवति अगात् अस्थात् अदात् अधात् अ

पात् अभूत् अघदिसिच् तस्यानेनलुक् इणोगाःपरस्मैपदे

इतिकिम् व्यधायिषाताम् अगायिषत इराग‍तौ डुधाञ्दाने

निपूर्वःस्यासिच्सीयुट्तासिष्वभावकर्मणोरुपदेशोऽज्झनग्रहद

शांवाचिराबद्वेतिइट् तस्यपक्षेइत्वज्ञवादाथिरिच्यादन्ताना

मितिआकारस्यायिः इरोगाः आयिः आत्मनेचानकारादिति

नलोपः इतिलुग्प्रकरणम् अथगुणप्रकरणेसंप्रसार

णपादःचतुर्थः घ ङौनाम्यन्तयोर्धातुविकरणा

योर्गुणः ङौनाम्यन्तयोर्धातुविकरणयोरन्त्यस्यगुणोभ

वति तत्रस्थानेन्तरतम इतिवचनात् इकारस्यस्थानेए

कारउकारस्य ओकारऋकारस्य अर्गुणोभवति चेता ने

ता स्तोता लविता कर्ताचिञ् चये णीञ् प्रापणे ष्टुञ्स्तु

तौ लूञ्छेदने डुकृञ्करणे स्वलनीता इट् अनेनगुणः

विकरणस्य यथा सुनोतु तनोतु पञ्चमीतु तुःस्वादेः त्त

नादेशः अनेनगुणः क्षुदृ अभिषवे तनुविस्तारे **नामिनश्चोप**
**धायालघोः** धातोरुपधायानामिनोलघोः गुणोभवति
वेदिता मोषिता वर्तिता विदज्ञाने मुषस्तेये वृतुवर्तने ता
इट् अनेनगुणः देग्धा दोग्धा दिहउपचये दुहप्रपूरणे दा
देर्घइतिहस्यघः झढपभेभ्यस्तथोर्धोधइतितस्यधः प्रुटो
तृतीयस्तथे इतिघस्यगः **अनिचिविकरणे** धातोरनि
विकरणे एव परेगुणोभवति नान्यस्मिन् जयति जिजयेति
अन्वि अनेनगुणः **करोतेः** डुकृञ्करणे इत्यस्यउविकरे
णेपरेगुणोभवति करोति कुरुतः कुर्वन्ति अस्योकारः सा
र्वधातुकेगुणेइत्यकारस्यउत्वम् **भिदेः** भिदिर्विदारणे इ
त्यस्यविकरणेपरेगुणोभवति पूर्वेणनियमेनानयोर्नप्रा
प्तः भेयति दिवा देर्यन् **अभ्यस्तानामुसि** अभ्यस्तानां
सम्बन्धीयः अनउस्सिजभ्यस्तविदाभ्योऽप्रवइति अनउस् त
स्मिन्परेगुणोभवति द्वित्वबहुत्वयोश्चपरस्मै इतिनिषेधःप्रा
प्तः अबिभयुः अजागरुः ऐयरुः ञिभीभये जागृनिद्राक्षये
ऋगतिप्रापणयोः ह्यस्तनीअन् अदाद्यादिः अन्वि जुहोत्या
देश्लौतिलुक् जुहोत्यादीनांसार्वधातुकइति भी ऋ द्वित्वं
ह्रस्वः द्वितीयचतुर्थयोर्वितिभस्यबः अकारऋवर्णस्य अर्ति
पिपर्त्योश्चेतिइत्वम् अभ्यासस्यासवर्णेइतिइय् स्वरादीनां
वृद्धिरादेः ऐकारः अनेनगुणः अदाद्यादिअनउस् जागः
अदादेर्लुक् अभ्यस्तानामितिकिम् चिन्युः चिञ् चये परो
क्ताउस् द्वित्वं यइवर्णस्यासंयोगपूर्वस्यानेकाक्षरस्येतिय
त्वम् **णाकाराद्वन्वेक्रीयितयोः** णकारादुवन्ने

प्रत्यये चेक्रीयिते च परे गुणो भवति नीयते लूयते सार्वधातुके यण् अगुणवान् प्रत्यादिग्रहणादिसूत्रेण ण चेक्रीयिते यथा ने नीयते लोलूयते बेभिद्यते नरीनृत्यते प्रत्यर्थं नयति लुनाति भिनत्ति नृत्यति यथाह नृतेः कमनोरी इति रीआगमः **अभ्यस्तस्य चोपधाया नामिनः स्वरे गुणिनि सार्वधातुके** अभ्यस्तसंज्ञकस्य धातोरुपधाभूतस्य नामिनो गुणो न भवति स्वरादौ गुणिनि सार्वधातुके परे नेनिजानि अनेनिजम् वेविषाणि अवेविषम् णिजिर् शौचपोषणयोः विष्लृ व्याप्तौ पञ्चमी आनि ह्यस्तनी अम् अन्वि जुहोत्यादीनामिति द्विर्वे निजि विजि विषामित्यभ्यासस्य गुणः अनेनोपधागुणाभावः अभिअङ्गात्वादिः अभ्यस्तस्येति किं वेदानि अन्विलुक् उपधायाः गुणः उपधाया इति किम् बिभराणि जिह्रयाणि डुभृञ् धारणपोषणयोः ह्रीलज्जायाम् आनि अन्वि जुहोत्यादेश्चेति लुक् जुहोत्यादीनां सार्वधातुके इति द्विर्वे अभ्यासकार्यम् भृञः भृञ्ज्ञाञ्माङामिदित्यभ्यासस्य इत्वम् स्वरे इति किं नेनेक्ति चवर्गस्य किः अन्यत्पूर्ववत् सार्वधातुके इति किम् ननेज अट् उपधागुणः **सनि चानिटि** सनि अनिटि अभ्यस्तस्य नामिन उपधायाः गुणो न भवति बिभित्सति बुभुत्सते भेत्तुमिच्छति बोद्धुमिच्छति इति वाक्ये कृते सन् बुधेरुदत्त्वादेर्वदभान्तस्य धातोरिति चसभः जिहृक्षति ग्रह उपादाने ग्रहीतुमिच्छति सन् ग्रहिस्वपिप्रच्छां सनीति संप्रसारणम् होढः इति हस्य ढः प्राग्वत् गस्य चः ग्रहगुहोः सनीति इडभावः षढोः कः से इति कत्वम् सनीति किम् वेत्ति अनिटीति कि

मृ मुकोपिषति कुषनिष्कर्षे कोषितमिच्छतिस्मन् **अद्यतन्याशिषोरात्मने** अनिटीत्येव नामिन उपधाया गुणो न भवति अद्यतन्याशिषोः मस्वत्यिन्य निट्यात्मनेपदे परे अभित्त अबुद्ध भिदिर् विदारणे बुध अवगमने त सिच् धुटश्च धुटीति सिचो लोपः अनेन उपधागुणाभावः धढघभेभ्यस्तथोर्धोऽ इति तस्य धः अभित्साताम् अभित्सत अबुत्साताम् अबुत्सत अद्यतनी आताम् अन्त सिच् आत्मने चानकारादिति नलोपः बुधेः प्राग्वद्धस्य भः आशिषि भित्सीष्ट बुधेः प्राग्वद्धस्य भः अनिटीति किम् अवर्तिष्ट वर्तिषीष्ट वृतु वर्तने अद्य त सिच् आशीः सीष्ट इट् गुणः अद्यतन्याशिषोरिति किम् भेत्स्यते भोत्स्यते भविष्यन्ती स्यते उपधाया गुणः बुधेस्तृतीयादेरिति बस्य भः अद्योपदेशादिति दथयोर्धः **ऋदन्तानां च** ऋदन्तानां धातूनां गुणो न भवति अद्यतन्याशिषोरात्मनेपदे निटि परे अकृत अहृत कृषीष्ट हृषीष्ट ऋतोऽवृङ्वृञ इटोऽभावः ह्रस्वाच्चानिट इति सिज्लोपः अनिटीति किम् अवरिष्ट वरिषीष्ट वृङ् संभक्तौ वृञ् वरणे इति वा स्वरः तत्र ऋस्याद् ऋकारोपि गृह्यते अस्तीर्ष्ट स्तीर्षीष्ट स्तॄञ् आच्छादने अद्यतनी त सिच् आशीः सीष्ट ऋदन्तस्येरगुणे इति इर् नामिनो र्वोरिति दीर्घः **स्थादोश्च** स्थागानि हन्तोश्च त्यस्य दासंज्ञकानां च अद्यतन्या आत्मनेपदे परे गुणो भवति समस्थित समस्थिषाताम् समस्थिषत अदित अदिषाताम् अदिषत अधित अधिषाताम् अधिषत स्थागातिनि हन्तो डुदाञ् दाने डुधाञ् दानधारणयोः अद्यतनी त आ

ताम् अत्र सिच्स्यादेशविदयतस्मात्मात्मनेइत्याकारस्यइत्वम् अ
टिङ्क्स्वाह्मानिट इति सिज्लोपः संहृषी अह्लात्यादिः सम्वप्रवि
भ्यः स्य इति तिष्ठतेरात्मनेपदम् **भुवः सिज्लुकि** भूसत्ता
याभित्यस्य सिचो लुकि कृते सति गुणो न भवति अभूत् अभूता
म् अभूवन् इत्यादापिवति भूध्यःसिचःपरस्मै इति सिचो लु
क् भुवो वोन्तः परोक्षायतन्योरित्यनेन वकारागमः सि
ज्लुकीति किम् अभविष्ट भूसत्तायां वि अति हृवौ अयत
सिच् इट् गुणः कर्मव्यतिहारे आत्मनेपदम् **सूतेः पञ्चम्या**
म् षूङ् प्राणिगर्भविमोचने इत्यस्य पञ्चम्यां परस्मात् गुणो न
भवति अचन्नसेपञ्चम्याः इति आमः सुवै सुवावहै सुवामहै
पञ्चमी आत्मने ऐ आवहै आमहै अविलक स्वरा
विवर्णत्वं पञ्चम्या इति किम् सविता स्वसती ता इट् गुणः
**देधीवेव्योश्च** देधीङ् दीप्तिदेवनयोः वेवीङ् वीतिना व
त्वे इत्येतयोर्गुणो न भवति देध्यनम् वेव्यनम् श्रुङितिश्रुङ्
श्रुङ्कामनाकान्ता इत्यनादेशः यइवर्णास्यासंयोगपूर्वस्या
नेकाक्षरस्येति यत्वम् देध्ये देध्यावहै देध्यामहै वेव्ये वेव्या
वहै वेव्यामहै पञ्चमी आत्मने उ ऐ आवहै आमहै यत्वम्
**रुदविदमुषां सनि** रुदिर् अश्रुविमोचने विदज्ञाने मु
षस्तेये एषां सनि परे गुणो न भवति रुरुदिषति विविदिषति
मुमुषिषति रोदितुमिच्छति वेदितुं मोषितुं धातोर्वेतिसन् इ
ट् पत्वे सनीति किम् रोदिता वेदिता मोषिता **नाम्यन्ता**
**नामनिटाम्** नाम्यन्तानां धातूनां अनिटामिङ् हितानां गु
णो न भवति सनि परे चिचीषति निनीषति शुश्रूषति लुलू

षति चेतुमिच्छति नेतुं यवितुं लवितुं सन् श्रुवोः उवर्णात्
पादिभ्यश्चेतीड्भावः चिणुइत्येतयोः स्वरान्तानां सनि इति दीर्घः
अनिटामितिकिं शीशयिषते शीङ् स्वप्ने शयितुमिच्छतिसन्
इड्गुणः य अय् शयिष इतिस्थिते चणपरोक्षेति द्वित्वं अनादि
व्यञ्जनलोपः **सर्वेषामात्मने सार्वधातुके उत्तमस्य प
ञ्चम्याः** सर्वेषांधातूनांविकरणानांचगुणोनभवति सार्व
धातुकेआत्मनेपदेपरे उत्तमेपञ्चम्याः पञ्चम्याआत्मनेप
दे उत्तमपुरुषेतुभवत्येव स्तुते स्तुवीत स्तुताम् अस्तुत स्तु
ञ् स्तुतौ धात्वादेः षः सः तस्मिन्निष्टेनिमित्ताभावेनैमित्तिक
स्याप्यभावः वर्तते सप्तमीषु इत पञ्चमीताम् ह्यस्तनीत अ
त्वि अदादेर्लुक् स्वरादाविवर्णोवुव् दुग्धे दुहीत दुग्धाम् अ
दुग्ध दुह प्रपूरणे अन्विलुक् दादेर्घ इति दस्य घः भुटेश्चढ
धभेभ्य इति तस्य धः झषांतृतीयश्चतुर्थे इति घस्य गः विकर
णस्य कुरुते कुर्वीत कुरुताम् अकुरुत डुकृञ् तनादेरुः क
रोतेरितिगुणः असोकारः सार्वधातुके गुणे चिनुते चिन्वी
त चिनुताम् अचिनुत चिञ् चये नुःस्वादेः सप्तम्यां नोर्वकारो
विकरणस्येतिवत्वम् आत्मने इतिकिम् एति इण्गतौ दीधि
पूर्ववद्गुणादि सार्वधातुके इतिकिम् चेष्यते लोष्यते भविष्य
न्तीस्यते दोग्धासे ह्यस्तनी आत्मने मध्यमैकवचने तासेऽप
धातुगुणः उत्तमेपञ्चम्या इतिकिम् स्तवै स्तवावहै स्तवामहै
करवै करवावहै करवामहै सुनवै सुनवावहै सुनवामहै
ष्टुञ् स्तुतौ डुकृञ् षुञ् अभिषवे धात्वादेः षः सः पञ्चमी पे
आवहै आमहै अन्विलुक् दुहः तनादेरुः षुञः नुःस्वादेः गु

णः द्वित्वबहुत्वयोश्च परस्मै सर्वेषां धातूनां विकरणानां
च गुणो न भवति सार्वधातुके परस्मैपदे द्वित्वबहुत्वयोश्च परयोः
अनुत्तमे पञ्चम्याः तथा भवत्येव स्नुतः स्नुवन्ति स्नुताम् स्नुवन्तु
अस्नुताम् अस्नुवन् अन्विलङ् स्वरादाविवर्णोवर्णान्तस्य धा
तोरियुव् दुनुतः दुन्वन्ति दुनुताम् दुन्वन्तु अदुनुताम् अदुन्वन् अ
न्विलङ् कुरुतः कुर्वन्ति कुरुताम् कुर्वन्तु अकुरुताम् अकु-
र्वन् तनादेरुरित्यादि पूर्ववत् चिनुतः चिन्वन्ति चिनुताम् चि
न्वन्तु अचिनुताम् अचिन्वन् चिञ् चयने स्वादेः नो वकारो वि
करणस्येति वत्वम् सुनुतः सुन्वन्ति सुनुताम् सुन्वन्तु असुनु
ताम् असुन्वन् द्वित्वबहुत्वयोरिति किम् एति दोग्धि करोति
चिनोति सार्वधातुके इति किम् स्तोतारौ स्तोतारः अनुत्तमे पञ्च
म्या इति किम् स्तवाव स्तवाम दोहाव दोहाम करवाव करवाम
सुनवाव सुनवाम पञ्चमीआव आम अन्विलङ् तनादेरुः उ
स्वादेः उकेरुपधाया गुणः अन्येषामनन्त्ययोरिति गुणः परोक्षा
यां च धातोर्गुणो न भवति परोक्षायां परस्मैपदे द्वित्वबहु
त्वयोः परयोः चक्रतुः चक्रुः उउहतुः उउहुः द्वित्वबहुत्वयो
रिति किम् अहंनिनय उदोहणात्वनमावेति वृद्धिनिषेधः स
र्वेष्वात्मने धातोर्गुणो न भवति परोक्षायामात्मनेपदे सर्वेष्वेक
द्विबहुत्वेषु परेषु चक्रे चक्राते चक्रिरे उउहे उउहाते उउ
हिरे आशिषि च परस्मै धातोराशिषि परस्मैपदे परे गुणो न
भवति नीयात् लूयात् परस्मा इति किम् चेषीष्ट चिञ् चयने आ
शीः सीडागमावत्वम् सप्तम्यां च धातोर्विकरणस्य च सप्त
म्यां परस्यां गुणो न भवति स्तुयात् नुयात् सुनुयात् चिनुया

त दीधि दिधयपेचपरे धातोर्विकरणस्य च गुणो न भवति स्त
दि द्रुमिध विद्धि क्षुञ् इट्प्रविदत्तापञ्चमीदि अन्विलक दा
देर्थः इत्यर्थाद्देर्धिः श्रुटान्तनीयस्म तर्थे इति च स्यगः स्त्र नो
स्वविकरणादसंयोगादिति हिलोपः तुदादेरनि तुदादि
गणपठितानां धातूनां गुणो न भवति अनि परे तुदति तु
दति लिखति तुद व्यथने गुद प्रेरणे लिखिताक्षरगत्योः स्व
रादावि वर्णोतिइयू अनीति किम् तोत्ता खलनीता उपधागु
णः आमि विदेरेव विदज्ञाने इत्यस्य आमि परे गुणो न भव
ति विदांचकार उप्रविदजागृभ्यो वा इत्याम् आमः कृञ् संवि
दांचक्रे समोगमृच्छि प्रच्छि स्वरत्यर्तिश्रुविदि—भ्य इत्यात्म
नेपदम् आमीति किं विवेद विदेरिति किम् जेतांचकार जा
गरां चकार उप्रदाहे जागृ निद्राक्षये प्राग्वत् आम् उप उ
पधागुणः जागृनाम्नयोरिति गुणः कुटादेरनिनिज्ञ
स्व कुट कौटिल्ये पुट संश्लेषणे कुच सङ्कोचे गुज शब्दे गु
ड रक्षायाम् डिप क्षेपे छुर छेदने तुट कलहकर्मणि त्रुट
छुट छेदने नड बन्धे कुड घस्सने कुड बाल्ये चु
ड प्रतिघाते तुड तोदने स्फुड स्फुड संवरणे उदात्ता उदात्तेत:
गुडिउपमे उदात्त अनुदात्तेत् णलवे प्रविभजने गुवुरी
धोत्सर्गे फगति स्थैर्ययोः उदात्ताः दु टुमाद्वेच पनेकुटादयः
एषां गुणो न भवति अनि निजस्त इन् इच् अट् वर्जितेषु प्र
त्ययेषु परेषु इन् इच् अट् गुणो भवत्येवेत्यर्थः कुटिता कु
टिष्यति अकुटीत् पुटिता पुटिष्यति अपुटीत् सूपनी ता
स्यति अपनी दि सिच् इट् ईट् इट अटीति सिचो लोपः कु

टिता क्रुटिते क्रुटितव्यम् त्रुटिता त्रुटिते त्रुटितव्यम् त्रुटित्वा
विलिटच् त्रुतुमौ क्रियायां क्रियार्थायामिति किम् तव्यानीया
वितितव्यः नुविता धुविता गुविता नुवनम् धुवनम् गुव
नम् गुद्धेतिगुट् गुवकामननाकान्ताइत्यनादेशः स्वरादावि
वर्णौस्वट् अनुवीत् अधुवीत् अगुवीत् अयदि सिच् इट् ई
ट् इटश्चे˜टीतिसिज्लोपःप्रागवत् उव् अनिनिजिस्थितिकि
म् कोटयति कुटत्वप्रवृत्तेः इन् उपधागुणः अकोटि अयत
भावकर्मणोश्चेतिइट् उपधागुणः इचस्तलोपः अकोटअट् वि
जेविटि ओविजी भयचलनयोरित्यस्यइटिपरेगुणोनभवति
उद्विजिता उद्विजिष्यति उद्विजितुम् उद्विजितव्यम् इटीतिकि
म् उद्वेजनम् अट् गुवकामित्यादेशः वोर्णोः ऊर्णुञ् आ
दनेइत्यस्यइटिपरे गुणोवाभवति प्रोर्णविता प्रोर्णुविता गु
णः स्वरादाविस्वट् इटीतिकिम् ऊर्णोति ह्यस्तनीटि अप्रावा
दिः अन्विलक्ष स्वरादीनांवृद्धिरादेः गुणोह्यस्तनाश्चेतिगुणः
**स्यादेविदेयतन्यामात्मने** ष्ठागतिनिवृत्तावित्यस्यदा
संज्ञकानांच अयतन्यामात्मनेपदेपरेअन्त्यस्यइत्वंभवति
समस्थित समस्थिषाताम् समस्थिषत अदित अदिषाताम्
अदिषत अधित अधिषाताम् अधिषत स्यादेश्चेत्यत्रसाधि
तम् अयतन्यामितिकिम् संस्थास्यते दास्यते धास्यते आत्म
नेइतिकिम् अस्थात् अदात् अधात् अयतनीदिइत्यस्यादा
पिबति भूम्यइतितिसिचोलोपः **शच्छादेरागमोकारः स**
**रादनिविकरणे** अञ्जूमोचने व्रश्चूच्छेदने विद्लृलाभेलि
पउपदेहे षिचक्षरणे अवदानासवितेतः कृतीच्छेदने खिद

परितापे पिश अवयवे एते मुचादयः एषामतिविकरणे परे स्वरात्परो नकारागमो भवति मुञ्चति लुम्पति विन्दति लिम्पति सिञ्चति कृन्तति खिन्दति पिंशति णकारेमनोरनुस्वारः अन्त्ये वर्गे वर्गान्तः अविकरण इति किम् मोक्ताख स्तता **मस्जिनशोर्धुटि** टुमस्जो शुद्धौ णश अदर्शने अनयोर्धुटि परे स्वरात्परो नकारागमो भवति मङ्क्ता मङ्क्ष्यति अमङ्क्षीत् अनेन स्वरात्परो नकारागमः धुटां तृतीय इति सस्य दः तवर्गस्य टेति दस्य जः अस्मिमस्जोर्धुटि इति जकारस्य लोपः चवर्गस्य किरसवर्णे इति जस्य कः वर्गे वर्गान्त इति नस्य ङः नशोर्धुटि नंष्टा नङ्क्ष्यति अनङ्क्षीत् अनेन नागमः नस्य मनोरनुस्वारः छशोश्चेति शस्य षः षोढः कः से धुटीति किम् मज्जति नश्यति दिवादेर्यन् **रधिजभोः स्वरे** रध हिंसायाम् जभ जृभि गात्रविनामे अनयोः स्वरे परे स्वरात्परो नकारागमो भवति रन्धयति जम्भयति रन्धनं प्रवृद्धे जम्भमाने इन् अनेन नागमः रन्धकः जम्भकः ण्वुण् अनुकाननाकान्त इति अकआदेशः नागमः स्वरे इति किम् रध्यते जभ्यते **नेटि रधेरपरोक्षायाम्** रध हिंसा संराध्योर्नित्यस्य इटि परे स्वरात्परो नकारागमो न भवति अपरोक्षायां परोक्षायां यस्य तत्र भवत्येव रधिता रधिष्यति अराधिष्यत् रधितव्यम् तव्यानीयावितितव्यः अपरोक्षायामिति किम् ररन्धिव ररन्धिम पूर्वेणानागमः **रभिलभोरविकरणपरोक्षयोः** रभ राभस्ये डुलभष् प्राप्तौ अनयोः स्वरे परे स्वरात्परो नकारागमो भवति अ

विकरणापरोक्षयोर्यः स्वरस्तं वर्जयित्वा रम्भयति रम्भमाणं प्रयु
ङ्क्ते लम्भमानं इत्यनेन नागमः वर्ग्यवर्गान्तः अविकरणापरोक्ष
योरिति किम् रमते लभते रेभे लेभे असैकव्यञ्जनमध्येना
देशादेः परोक्षायामित्यत्वाभ्यासलोपौ स्वर इति किम् रम्यते
लभ्यते सार्वधातुके यण् हुधुड्भ्यो हेर्धिः हुदानादन्तयो
रित्यस्मात् धुडन्ताच्च परस्य हेः धिरादेशो भवति जुहुधि चका
द्धि चकास्तदीमि पञ्चमीहि अन्विलुक् अनेन हेर्धिः धुटां तृती
यश्चतुर्थे इति स्या स्मावर्णपात्स्यन्तृतीयोदः जुहोतेः जुहो
त्यादेश्चेति लुक् चकासः अदादेर्लुक् भिन्धि स्वराद्रुधादेः प
परोनशाद्धः तस्य सयादेर्विकरणान्तलोपः हेर्धिः पिण्ड्ढि पि
ण्ड्ढि पिपृविशेषलोपिस्न संघूर्णानक्षिस्वराद्रुधादेः परोनशा
द्धः सयादेर्विकरणान्तलोपः धुटां तृतीयश्चतुर्थे इति षस्य ढः
तवर्गश्च टवर्गे तिनस्य णः हुधुड्भ्यामिति किम् क्रीणीहि क्री
नीहि नाक्र्यादेः उभयेषामीकारोव्यञ्जनादावितीकारः हेरि
ति किम् जुहोति अन्विलुक् अस्तेः असभुवीत्यस्मात्परस्य हेः
धिरादेशो भवति एधि असहि अन्विलुक् आसेरादेरित्यका
रलोपः दास्योरभ्यासलोपश्चेति सकारस्य एत्वम् अनेन हेर्धिः
शास शासेः शास अत्राशिषां इत्यस्मात्परस्य हेर्धिरादेशो
भवति शाधि शासेश्च शाआदेशः शाधि अन्विलुक् हेर्धिः लोपो
ऽभ्यस्तादन्तिनः अभ्यस्तात्परस्य अन्त् इत्यस्य नकारलोपो
भवति दधति दधतु जक्षति जक्षतु पान्तु हुदानपा ... ः अ
न्ति अन्तु अन्ति जुहोत्यादेश्च लुक् जुहोतेः सार्वधातुके इति उ
कारस्य वत्वम् जुह्वति जुह्वतु जुह्वत्यादेश्चेति अभ्यस्तसंज्ञा

अभ्यस्तादितिकिम् यान्तियाञ्चापतो अन्विलुक् अन्तिनइति किम् ददीरन् दा सप्तमी ईरन् अभ्यस्तानामाकारस्येत्यालो पः **आत्मनेचानकारात्** आत्मनेपदयस्यः अन्तघादेस स्यनकारलोपोभवति अनकारात् अकारान्तरस्यतनभव ति कुर्वते चिन्वते लुनते कुर्वताम् चिन्वताम् लुनताम् अ कुर्वत अचिन्वत अलुनत अन्ते अन्ताम् अन्त तनादेरः उः स्वादेःनाक्र्यादेः करोतेर्गुणः अस्योकारःसार्वधातुकेइस्वत्व म् नोर्वकारइतिनोर्वत्वम् धादीनांह्रस्वः क्र्यादीनांविकरण स्येत्यालोपः अकुर्वत अद्यतनी अन्त सिच् ऋदन्तानांचेति गुणाभावः अनेननलोपः आत्मनेइतिकिं चिन्वन्ति लुनन्ति अनकारादितिकिम् स्रवन्ते च्यवन्ते स्रुङ्गतौ च्युङ्गतौ अ न्ते अन्विगुणः अकारस्यतरलोपः **शीङोरुडन्तोऽदादेः** शी ङःस्येइत्यस्मात्परस्यान्त इत्यस्यआदिः रेफागमोभवति इका रउच्चारणार्थः शेरते शेरताम् अशेरत अन्ते पञ्च अन्ताम् ह्यस्त अन्त अनेनरेफागमः शीङःसार्वधातुकेइतिगुणः अन्ते रितिकिम् शेते शयाते ते आते **वेत्तेःसंप्रतिपरस्मैणादयः** विदज्ञानेइत्यस्मात् परेषांसंप्रतिवर्तमानेकालेवि हितायावर्तमानाविभक्तेः सम्बन्धिनांपरस्मैपदानांत्यादी नांयथासांख्यंणद् आदय आदेशावाभवन्ति वेद विदतुःवि दुः वेत्थ विदथुः विद वेद विद्व विद्म अन्वि द्वित्वबहुत्वयो श्चेतिगुणाभावः स्थानिवदादेशाइतिवचनाद्वर्तमानेवास्थिते तिद्विवचनादिनास्ति पक्षे वेत्ति वित्तः विदन्ति वेत्सि वित्थः वित्थ वेद्मि विद्वः विद्मः संप्रतीतिकिम् विद्यात् अन्विलुक्

परस्मैपदानामितिकिम् संविन्ते संविदाते संविद्रते वेत्राते अ
न्ते समोगमृच्छेत्यात्मनेपदम् बहुत्वेवेत्ते विभाषेति रेफाग
मः पक्षे संविदते आत्मनेचानकारादितिनलोपः **ब्रुवःप
ञ्चानामादितआहश्च** ब्रूञ् व्यक्तायांवाचि इत्यस्मात्प
रेषांपञ्चानांवर्तमानायाः संबन्धिनामादितः आदौस्थिता
नांपञ्चानांवचनानांति तस् अन्ति सिथस् इत्येतेषांयथा
संख्यंपञ्चवा णलादयश्च अतुस् उस् थल् अथुस् इत्ये
तेआदेशाभवन्ति ब्रूञश्चआहिआदेशोभवति इकारउच्चा
रणार्थः आह आहतुः आहुः आत्थ आहथुः थलिपोपधे
तिहस्यथः तस्यत्रयोषेषाविटांप्रथमइतितः पक्षे ब्रवीति ब्रू
तः ब्रुवन्ति ब्रवीषिब्रूथः तिसोःब्रुवईड्वचनादिषुगुणः सर्वत्र
अन्वितर्क पञ्चानामितिकिम् ब्रूथ **धेरश्च** ब्रूञः स्यादेश
धलिपरे ङतस्यआहि आदेशास्यानयस्यचआदेशोभवति आ
तमसाधनेआगवत् अजादिषकारादन्यत्रथप्रत्ययेनभवतिइ
थ **अकारादटओ** आकारान्तस्यअटऔकारादेशोभवति
पपौ अटइतिकिम् पपिथ पल् द्विवे ३३ **ॠदन्तस्येरगु
णे** धातोर्यःअन्त्यॠकारस्तस्यअगुणेप्रत्ययेपरे इर् आदे
शोभवति किरति गिरति कृविक्षेपे गृनिगरणे अन्वितउदादे
रनीयरत्वम् कीर्यते गीर्यते सार्वधातकेयात् अनेनऋ
कारस्येर् नामिनोर्वोरितिदीर्घः अगुणेइतिकिम् करिता
**उरोष्ठोपधस्य** ओष्ठोपधस्यधातोरन्तस्यऋकारस्यउर्
आदेशोभवति अगुणेप्रत्ययेपरे आपूर्यते आभूर्यते पृपाल
नपूरणयोः भृभजने ते सार्वधातकेयात् अनेनऋकारस्यउ

र् नामिनोर्वोरिति दीर्घः मुमूर्षति बुभूर्षति मरितुमिच्छति
भरितुमिच्छति सन् ऋदन्तानां सनि वा इडभावः सनि वा इ
ति तन्त्रान्तरात् अनेन उर् नामिनोर्वोरिति दीर्घः द्वित्वं अभ्यास
कार्यम् सनि चानिटीति सो न गुणम् ओष्ठ्योपधस्येति किम् की
र्यते कॄ विक्षेपे ॠदन्तस्येति इर् दीर्घः अगुण इति किम् परि
ता इण्यसमानलोपोपधाया ह्रस्वश्चणि असमान
लोपस्य यस्य समानो वर्णो न लुप्यते तस्य उपधाया
ह्रस्वो भवति इनि चणपरे परतः अपीपचत् अपीपठत् पच
न्तं प्रायुङ्क्त पठन्तं प्रायुङ्क्त इन् अस्योपधेति दीर्घः दिचण्
अङ्गत्वादिः सर्वविधिभ्यो लोपविधिर्बलवान् इत्यादौ कारि
तलोपः इनि कृतं स्थानिवदिति वचनात् पच् पठ् द्वित्वं
अभ्यासस्यादिव्यञ्जनम् ततः प्रत्ययलोपे प्रत्ययलक्षणेन
अनेन उपधाह्रस्वः अलोपे समानस्य सन्वदिति सन्वद्भावा
त्सन्यवर्णस्येति इत्वम् दीर्घो लघोः असमानलोप इति किम्
अरराजत् राजानमत्यक्रमीत् राजन्शब्दात् इन्कारितं च
धात्वर्थे इति इन् इनि लिङ्गस्यानेकाक्षरस्येत्यन्त्यस्वरादिलोपः
दिचण् कारितलोपादिगमवत् उपधाया इति किम् अचकां
क्षत् काक्षि काङ्क्षायाम् इकारो नकारागमार्थः अनिदनुब
न्धेति ज्ञापकान्नकारागमः मनोरनुस्वारो धुटीत्यनुस्वारः
तस्य वर्गे वर्गान्त इति ङः काङ्क्षन्तं प्रायुङ्क्त इन् दिचण् प्राग्वत्
चणीति किम् पाठयति नशास्वृदन्तवन्ध्यानाम् शा
संस्वृधातोर्हादित्वस्य ऋदकारान्तवन्ध्यानां धातूनां चणपरे इ
नि परतः उपधाया ह्रस्वो न भवति अशशासत् अरराजत्

अलुलोकत् अडुढौकत् अययाचत् शासुअनुशिष्टौ राजृदीप्तौ
लोकृदर्शने ढौकृगत्यर्थः टुयाचृयाच्ञायाम् ऋकारइदर्थः
शासनेप्रायुङ्क्त एवंराजन्तलोकमानं ढौकमानं याचमानंइ
नू दिचण् ढौकेः एघइत्युक्त्वादेशइत्यभ्यासस्यउकारोह्रस्वः
**लोपःपिबतेरीच्चाभ्यासस्य** पापानेइत्यस्य इतिचणपरेप
रतः उपधायालोपोभवति अभ्यासस्यचईत्वम् अपीप्यत् अ
पीप्यताम् अपीप्यन् पिबन्तं प्रायुङ्क्त प्रायुङ्क्तातां प्रायुङ्क्तइति
वाक्येकृतेइन् शाछासाह्वाव्यावेपामिनिइतिपाइत्यस्य आ
कारस्यआयि दिचण् सर्वविधिभ्योलोपविधिर्बलवानित्यने
नादावुपधालोपः इतिकृतेस्थानिवदितिपाद्वित्वं तस्यान्ते
नईत्वम् **तिष्ठतेरित्** ष्ठागतिनिवृत्तावित्यस्यइतिचणपरे
परतः उपधायाइत्वंभवति अतिष्ठिपत् धात्वादेषः सः ना
म्निस्यस्थेतिता पकारात्ठस्यथः तिष्ठन्तंप्रायुङ्क्तइन् अर्तिह्री
ब्लीरीक्ष्माय्यादन्तानामितिपाआगमः दि चण् कारितलोपः अ
नेनउपधायाइत्वम् इतिकृतेस्थानिवदितिस्थाद्वित्वं शिस्य
रोघोषइतिसकारेनिवृत्तेष्ठा अवाथिप्यते द्वितीयचतुर्थ
योरितिथस्यतः सन्वद्भावादित्वम् निमित्तात्प्रत्ययेनिश्चात्स
कारस्यषत्वं तवर्गस्यषटेतिथस्यठः **जिघ्रतेर्वा** घ्रागन्धो
पादानेइत्यस्यइतिचणपरेपरतः उपधायाइत्वंवाभवति अजि
घ्रिपत् जिघ्रन्तंप्रायुङ्क्तइन् आत्वन्तानामागमःदिचण् कारितलो
पः अनेनउपधायाइत्वम् घ्राद्वित्वं अभ्यासकार्यम् सन्वद्भा
वादित्वम् पक्षे अजिघ्रपत् इत्यसमानेउपधायाह्रस्वः अन्य
स्यापितत् **इतिलघुसमानाघोतप्रकरणेग्रणाप**

दः पञ्चमः ५ **अनिदनुबन्धानामगुणेऽनुषङ्ग**
लोपः अनिदनुबन्धानां येषामिकारोऽनुबन्धो नास्ति तेषां धा
तूनामनुषङ्गलोपो भवति अगुणे प्रत्यये परे स्रस्यते ध्वस्यते
स्रन्सु ध्वन्सु अवस्रंसने सार्वधातुके यण् अनेनानुषङ्गलो
पः सनीस्रस्यते दनीध्वस्यते बनीभ्रश्यते अपर्यस्रंसते ध्वंस
ते भ्रंशते धातोरेकस्वरादिति यङ् आहुः द्वित्वं वञ्चि स्रन्सीति नी
आगमः अत्र षङ्गलोपः न लोकारानुबन्धेति अगुणत्वम् स्रस्तः
ध्वस्तः भ्रष्टः गत्यर्थाकर्मकेति क्तः केयएवश्च योऽक्रवर्जमिति
यएवन्नावादगुणत्वेनानुषङ्गलोपः स्कोस्मेति षस्य षः तव
र्गस्य षटेति तस्य टः अनिदनुबन्धानामिति किम् वन्द्यते व
दि अभिवादनस्तुत्योः इकारेण नकारागमार्थः अगुणे इति किम्
स्रंसिता ध्वंसिता भ्रंशिता **नशाह्वाविकरणात्** अनि
दनुबन्धेति निवृत्तम् नशाह्वाश्च विकरणात् परस्यानुषङ्गस्य
लोपो भवति हिनस्ति हिंस्तः हिंसन्ति भनक्ति भङ्क्तः भञ्जन्ति
तृहि हिसि हिंसायाम् इकारेण नकारागमार्थः भञ्जो आमर्दने
तिनस्य अन्तिस्वराद्धातोः परो नशाह्वः अनेनानुषङ्गलोपः द्वि
बहुत्वयोः श्नसादेर्विकरणान्तलोपः मनोरनुस्वारः भञ्जेश्च व
र्गस्य किः श्रुटि वर्गे वर्गान्तः विकरणादिति किम् नन्दति टुन
दि समृद्धौ अनिदनुबन्धानामिति नोपकारान्नकारागमः

**परोक्षायामिन्धिश्रन्थिग्रन्थिदम्भीनामगुणे** जिइ
न्धी दीप्तौ श्रन्थ ग्रन्थ सन्दर्भे दम्भु दम्भे एषां अगुणायां परो
क्षायां परस्यामनुषङ्गलोपो भवति समीधे इन्धु संपूर्वः परो
क्षाए अनेनानुषङ्गलोपः द्वित्वे श्रेथतुः श्रेथुः ग्रेथतुः ग्रेथुः

